## द्वितीयः पाठः



# बिलस्य वाणी न कदापि मे श्रुता

[प्रस्तुत पाठ संस्कृत के प्रसिद्ध कथाग्रन्थ 'पञ्चतन्त्रम्' के तृतीय तन्त्र 'काकोलूकीयम्' से संकलित है। पञ्चतन्त्र के मूल लेखक विष्णुशर्मा हैं। इसमें पाँच खण्ड हैं जिन्हें 'तन्त्र' कहा गया है। इनमें गद्य-पद्य रूप में कथाएँ दी गयी हैं जिनके पात्र मुख्यतः पशु-पक्षी हैं।]

**अव्ययप्रयोगः**

कस्मिंश्चित् वने खरनखरः नाम सिंहः प्रतिवसति स्म। सः कदाचित् इतस्ततः परिभ्रमन् क्षुधार्तः न किञ्चिदपि आहारं प्राप्तवान्। ततः सूर्यास्तसमये एकां महतीं गुहां दृष्ट्वा सः अचिन्तयत्-"नूनम् एतस्यां गुहायां रात्रौ कोऽपि जीवः आगच्छति। अतः अत्रैव निगूढो भूत्वा तिष्ठामि" इति।



एतस्मिन् अन्तरे गुहायाः स्वामी दधिपुच्छः नाम शृगालः समागच्छत्। स च यावत् पश्यति तावत् सिंहपदपद्धतिः गुहायां प्रविष्टा दृश्यते, न च बहिरागता। शृगालः अचिन्तयत्-"अहो विनष्टोऽस्मि। नूनम् अस्मिन् बिले सिंहः अस्तीति तर्कयामि। तत् किं करवाणि?" एवं विचिन्त्य

© NCERT not to be republished

दूरस्थः रवं कर्तुमारब्धः-"भो बिल! भो बिल! किं न स्मरसि, यन्मया त्वया सह समयः कृतोऽस्ति यत् यदाहं बाह्यतः प्रत्यागमिष्यामि तदा त्वं माम् आकारयिष्यसि? यदि त्वं मां न आह्वयसि तर्हि अहं द्वितीयं बिलं यास्यामि इति।"



अथ एतच्छ्रुत्वा सिंहः अचिन्तयत्-"नूनमेषा गुहा स्वामिनः सदा समाह्वानं करोति। परन्तु मद्भयात् न किञ्चित् वदति।"

अथवा साध्विदम् उच्यते-

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः।  
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत्।।



तदहम् अस्य आह्वानं करोमि। एवं सः बिले प्रविश्य मे भोज्यं भविष्यति। इत्थं विचार्य सिंहः सहसा शृगालस्य आह्वानमकरोत्। सिंहस्य उच्चगर्जन-प्रतिध्वनिना सा गुहा उच्चैः शृगालम् आह्वयत्। अनेन अन्येऽपि पशवः भयभीताः अभवन्। शृगालोऽपि ततः दूरं पलायमानः इममपठत्-

अनागतं यः कुरुते स शोभते  
स शोच्यते यो न करोत्यनागतम्।  
वनेऽत्र संस्थस्य समागता जरा  
बिलस्य वाणी न कदापि मे श्रुता।।



© NCERT not to be republished




| | | |
|---|---|---|
| **कस्मिंश्चित्** (कस्मिन्+चित्) | – | किसी (वन में) |
| **क्षुधार्तः** (क्षुधा+आर्तः) | – | भूख से व्याकुल |
| **अन्तरे** | – | बीच में |
| **निगूढो भूत्वा** | – | छिपकर |
| **सिंहपदपद्धतिः** | – | शेर के पैरों के चिह्न |
| **रवः** | – | शब्द/आवाज |
| **यावत्-तावत्** | – | जबतक, तबतक |
| **समयः** | – | शर्त |
| **बाह्यतः** | – | बाहर से |
| **यदि-तर्हि** | – | अगर, तो |
| **तच्छ्रुत्वा** (तत्+श्रुत्वा) | – | वह सुनकर |
| **भयसन्त्रस्तमनसाम्** | – | डरे हुए मन वालों का |
| **हस्तपादादिकाः** (हस्तपाद+आदिकाः) | – | हाथ-पैर आदि से सम्बन्धित |
| **वेपथुः** | – | कम्पन |
| **भोज्यम्** | – | भोजन योग्य (पदार्थ) |
| **सहसा** | – | एकाएक |
| **अनागतम्** | – | आने वाले (दुःख) को |
| **शोच्यते** | – | चिन्तनीय होता है |
| **संस्थस्य** | – | रहते हुए का/के/की |
| **जरा** | – | बुढ़ापा |
| **कुरुते/करोति** | – | (निराकरण) करता है |
| **बिलस्य** | – | बिल का (गुफा का) |

© NCERT not to be republished



## अभ्यासः

**1. उच्चारणं कुरुत–**

| | | |
|---|---|---|
| कस्मिंश्चित् | विचिन्त्य | साध्विदम् |
| क्षुधार्तः | एतच्छ्रुत्वा | भयसन्त्रस्तमनसाम् |
| सिंहपदपद्धतिः | समाह्वानम् | प्रतिध्वनिः |

**2. एकपदेन उत्तरं लिखत–**

(क) सिंहस्य नाम किम्?

(ख) गुहायाः स्वामी कः आसीत्?

(ग) सिंहः कस्मिन् समये गुहायाः समीपे आगतः?

(घ) हस्तपादादिकाः क्रियाः केषां न प्रवर्तन्ते?

(ङ) गुहा केन प्रतिध्वनिता?

**3. मञ्जूषातः अव्ययपदं चित्वा वाक्यानि पूरयत–**

| | | | | | |
|---|---|---|---|---|---|
| सदा | बहिः | दूरं | तावत् | तर्हि | तदा |

(क) यदा दशवादनं भवति ................ छात्राः विद्यालयं गच्छन्ति।

(ख) सूर्यः पूर्वदिशायां ................ उदेति।

(ग) शृगालः गुहायाः ................ आसीत्।

(घ) स च यावत् पश्यति, ................ सिंहपदपद्धतिः गुहायां प्रविष्टा दृश्यते।

(ङ) शृगालोऽपि ततः ................ पलायमानः अपठत्।

(च) यदि सफलताम् इच्छसि ................ आलस्यं त्यज।




© NCERT not to be republished

**4. पूर्णवाक्येन उत्तरत-**

(क) खरनखरः कुत्र प्रतिवसति स्म?

(ख) महतीं गुहां दृष्ट्वा सिंहः किम् अचिन्तयत्?

(ग) शृगालः किम् अचिन्तयत्?

(घ) शृगालः कुत्र पलायितः?

(ङ) किं विचार्य सिंहः शृगालस्य आह्वानमकरोत्?

(च) अस्यां कथायां कस्य चातुर्यं निरूपितं सिंहस्य शृगालस्य वा?

**5. मञ्जूषातः अव्ययपदानि चित्वा रिक्तस्थानानि पूरयत-**

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सहसा | दूरे | क्रमशः | यदा | तदा | परन्तु | यदि | तर्हि |

एकस्मिन् वने कश्चन व्याधः जालं विस्तीर्य ................ स्थितः। .................. आकाशे सपरिवारः कपोतराजः चित्रग्रीवः निर्गतः। ................. तण्डुलकणानामुपरि कपोतानां लोभो जातः। ........................ राजा तत्र सहमतः नासीत्। तस्य युक्तिः आसीत् ................ निर्जने वने कोऽपि मनुष्यो नास्ति ...................... कुतो वा तण्डुलकणानां सम्भवः? ................. राज्ञः उपदेशमस्वीकृत्य ते नीचैः आगता, ................. जाले निपतिताः। अतः उक्तम् '............. विदधीत न क्रियाम्'।



© NCERT not to be republished

6. **घटनाक्रमानुसारं वाक्यानि लिखत-**

(क) गुहायाः स्वामी दधिपुच्छः नाम शृगालः समागच्छत्।

(ख) सिंहः एकां महतीं गुहाम् अपश्यत्।

(ग) परिभ्रमन् सिंहः क्षुधार्तो जातः।

(घ) दूरस्थः शृगालः रवं कर्त्तुमारब्धः।

(ङ) सिंहः शृगालस्य आह्वानमकरोत्।

(च) दूरं पलायमानः शृगालः श्लोकमपठत्।

(छ) गुहायां कोऽपि अस्ति इति शृगालस्य विचारः।

## योग्यता-विस्तारः

**ग्रन्थ-परिचय** – विष्णुशर्मा ने राजा अमरशक्ति के मूर्ख पुत्रों को कुशल राजनीतिज्ञ बनाने के उद्देश्य से कथाओं के संकलन के रूप में पञ्चतन्त्र की रचना की थी। इसमें मित्रभेद, मित्रसम्प्राप्ति, काकोलूकीय, लब्धप्रणाश तथा अपरीक्षित-कारक; इन पाँच खण्डों में कुल 70 कथाएँ तथा 900 श्लोक हैं। श्लोकों में प्रायः तर्कपूर्ण नीतिश्लोक प्रयुक्त हैं। पञ्चतन्त्र का अनुवाद चतुर्थ शताब्दी के आसपास ईरान की पहलवी भाषा में हुआ था। इसी के आधार पर विदेशी भाषाओं में इसके अनेक अनुवाद हुए।

'काकोलूकीयम्' पञ्चतन्त्र का तृतीय तन्त्र है। इसका नाम काक और उलूक की मुख्य कथा के कारण पड़ा है।

### व्याकरणम्

**अव्यय** – संस्कृत में दो प्रकार के शब्द हैं-विकारी तथा अविकारी। विकारी शब्द परिवर्तनशील हैं। संज्ञा, सर्वनाम, विशेषण और क्रिया शब्द विकारी हैं। जैसे-बालकः, सः, शुक्लः, गच्छति। अविकारी शब्द अव्यय कहलाते हैं। इनके रूप कभी नहीं बदलते। जैसे-अत्र, अधुना, अपि।






© NCERT not to be republished

अव्ययों के भी रूढ और यौगिक दो रूप मिलते हैं। रूढ अव्ययों के खण्ड नहीं होते जैसे–च, अपि, वा, तु, खलु, न इत्यादि। यौगिक अव्ययों के खण्ड होते हैं ये कृत्, तद्धित या समास के रूप में होते हैं। कृत् से बने अव्यय हैं–गत्वा, गन्तुम् इत्यादि। तद्धित से बने अव्यय हैं–सर्वथा, एकदा, तत्र, इत्थम्, कथम् इत्यादि। समास के रूप में अव्यय हैं–प्रतिदिनम्, यथाशक्ति इत्यादि।

प्रस्तुत पाठ में कदाचित्, इतस्ततः (इतः + ततः), न, दृष्ट्वा, नूनम्, अपि, तर्हि, अत्र, एव (अत्रैव), भूत्वा, इति, च, बहिः, अहो, एवम्, विचिन्त्य, सह, तदा, यदि, अथ, श्रुत्वा, सदा, परन्तु (परम् + तु), प्रविश्य, सहसा, कदापि (कदा + अपि) ये अव्यय हैं। इनकी उपर्युक्त कोटियों में पहचान की जा सकती है।

© NCERT not to be republished